

पठनम् एव अवगमनम्

# चुन्नी मुन्नी च

*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942


PD 153T RPS

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा अमर उजाला पब्लिकेशन्स लिमिटेड, सी-21, सेक्टर-59, नोएडा 201301 द्वारा मुद्रित।

ISBN 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-787-0

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

**प्रकाशन सहयोग**

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# चुन्नी मुन्नी च





मुन्नी

चुन्नी





माधवः

काजलः




काजल–माधवयोः गृहे द्वे गृहगोधिके आस्ताम्।
एका गृहगोधिका श्वेतवर्णा आसीत्।
अपरा गृहगोधिका कृष्णवर्णा आसीत्।
गृहगोधिके गृहस्य भित्तौ संश्लिष्टे आस्ताम्।







माधव-काजलाभ्यां गृहगोधिकाः रोचन्ते स्म।
तौ गृहगोधिकयोः नामकरणम् अपि कृतवन्तौ।
तौ श्वेत-गृहगोधिकां 'चुन्नी' इति नाम्ना आह्वयतः स्म।
कृष्ण-गृहगोधिकायाः नाम 'मुन्नी' आसीत्।




चुन्नी मुन्नी च संपूर्ण–गृहस्य भित्तिषु भ्रमतः स्म।
ते परस्परम् अनुधावतः स्म।
ते यदा कदा छद्यां परावृत्य संश्लिष्टे दृश्येते स्म।
काजलः माधवः च कार्यं त्यक्त्वा गृहगोधिकाद्वयं पश्यतः स्म।





यदा कदा चुन्नी मुन्नी च अदृश्ये अभवताम्।
काजलः आदिनं तयोः अन्वेषणं करोति स्म।
माधवः अपि तयोः अन्वेषणे समर्थः न भवति स्म।
चुन्नी मुन्नी च कस्मिन् अपि कोणे प्रविशतः स्म।






चुन्नी मुन्नी च रात्रौ ध्वनिम् अकुरुताम्।
माधवः अनुभवति स्म यत् ते तेन सह सम्भाषेते स्म।
माधवः बहुवारं ताभ्यां सह वार्तालापाय चेष्टते स्म।
सः चुन्नी-मुन्नी-सदृशं ध्वनिं करोति स्म।



चुन्नी मुन्नी च बहुवारम् अधः आगच्छताम्।
ते भूमौ अपि अधावताम्।
काजलः ते द्वे पाक-शालायां दृष्टवती।
ते पाकशालायां संपुटकानां पृष्ठे प्रविशतः स्म।







चुन्नी मुन्नी च कीटान् अखादताम्।
ते प्रायः तिलचट्ट–कीटान् धारयत्यौ दृश्येते स्म।
चुन्नी तिलचट्टकीटं मुखे संपीडयति स्म।
मुन्नी मशकं गृह्णाति निगिलति च।




एकस्मिन् दिने चुन्नी मुन्नीम् अनुधावति स्म।
काजलः अन्वभवत् यत् ग्रहणाग्रहण-क्रीडा इव प्रचलति।
मुन्नी वेगेन भित्तौ धावति स्म।
चुन्नी तस्याः पश्चात् आसीत्।



अकस्मात् चुन्नी मुन्नी च वियुक्ते अभवताम्।
काजलः अपश्यत् यत् मुन्न्याः पुच्छः लुप्तः आसीत्।
चुन्न्याः मुखे मुन्न्याः पुच्छः आसीत्।
मुन्न्याः पुच्छः छिन्नः आसीत्।





काजलः उच्चैः चीत्कारं कृतवती।
माधवः धावन् आगच्छत्।
काजलः अति उद्‌विग्ना आसीत्।
सा अकथयत् – "चुन्नी मुन्न्याः पुच्छम् अखादत्।"





माधवः पुच्छ–विहीनां मुन्नीम् अपश्यत्।
उभौ दुःखितौ जातौ।
तथापि मुन्नी इतस्ततः धावति स्म।
चुन्नी कुत्रापि निलीना आसीत्।



रात्रौ माधवः मुन्न्याः पुच्छ-विषये अचिन्तयत्।
काजलः अपि मुन्न्याः पुच्छ-विषये चिन्तयति स्म।
तौ चुन्नीं प्रति अतिक्रोधम् अकुरुताम्।
मुन्नी-विषये वार्तालापं कुर्वन्तौ तौ सुप्तवन्तौ।







प्रातः उत्तिष्ठन्तौ एव तौ मुन्न्याः अन्वेषणे रतौ अभवताम्।
मुन्नी पाकशालायाः भित्तौ आसीत्।
सा नित्यम् इव मशकं खादति स्म।
चुन्नी छद्यां परावृत्य संश्लिष्टा आसीत्।



काजलः माधवः च प्रतिदिनं मुन्नीं पश्यतः स्म।
तौ अधुना अपि चुन्नीं प्रति रुष्टौ आस्ताम्।
एकदा मुन्नी अधः आगत्य तिलचट्ट-कीटं गृह्णाति स्म।
माधवस्य दृष्टिः तस्याम् अपतत्।





माधवः अपश्यत् यत् मुन्याः नूतनः पुच्छः उद्भूतः आसीत्।
सः काजलम् आहूय आनीतवान्।
काजलः अपि मुन्याः लघु पुच्छम् अपश्यत्।
तौ अवगतवन्तौ यत् गृहगोधिकायाः नवीनः पुच्छः पुनः उद्भवति।

# काजल-माधवयोः अपराः कथाः



















